कामद ।।

चौराशी० पुनः शुद्धोदकम् ।

घृतस्नानम् - रसानामुत्तममाज्यं देवानां च सदाप्रियम् । तेन त्वं स्नापितो देव निधिकान्तिप्रदा भव।।

पुनः शुद्धजलम् ।

मधुना - यस्य स्मरणमात्रेण तृप्तिं यान्ति पितामहाः । मधुना स्नापितो देव नित्यं शोकहरो भव ।।

पुनः शुद्धजलम् ।

शर्करया - यमलोकभयात्त्रस्तः शरणं त्वां गतः प्रभो ।
खण्डस्नानेन देवेश ! मां कुरूष्व सुखान्वितम् । पुनः शुद्ध - जलम् ।

जलेन - परमानन्दवोधाब्धिनिमग्ननिजमूर्तये । साङ्गोपाङ्गमिदं स्नानं कल्पयाम्यहमीश ! ते ।।

वस्त्रम् - मायाचित्रपटच्छन्ननिजगुह्योरुतेजसे । निवारणविज्ञानवासस्ते कल्पयाम्यहम् ।।

इति वस्त्रयुगलम् ।

उत्तरीयकम् - यमाश्रित्य महामाया जगत्संमोहिनी सदा ।

तस्मै ते परमेशाय कल्पयाम्युत्तरीयकम् । इत्युत्तरीयकम् ।

यज्ञोपवीतम् - यस्य शक्तित्रयेणैव संप्रीतमखिलं जगत् । यज्ञसूत्राय तस्मै ते यज्ञसूमत्रं प्रकल्पये ।।

आभूषणानि- स्वभावसुन्दराङ्गाय नानाशक्त्याश्रयाय च ।
भूषणानि विचित्राणि कल्पयाम्यमरान्वित ।।

चन्दनम् - परमानन्दसौरभ्यपरिपूर्णदिगन्तरम् । गृहाण परमं गन्धं कृपया परमेश्वर ।।

पुष्पम् - मालाञ्च -

तुरीयवनसंभूतं नानागुणमनोहरम् । अमन्दसौरभं पुष्पं गृह्यतामिदमुत्तमम् ।।

अक्षता- अक्षतान्धवलान्देव गृहाण वरदर्षभ । देव देवोत्तमत्वं ! हि ह्यक्षयं कुरू मे फलम् ।।

षोडशोपचारपूजनमन्त्रा :-

प्रयोग: - ॐ सहस्त्रशीर्षापुरुषः सहस्त्राक्षःसहस्त्रपात् । सभूमिꣳसर्व्वतस्पृत्वात्य तिष्ठद्दशाङ्गुलम् ।।
ॐ पुरुषएवेदꣳसर्व्वंय्यद्भूतंय्यच्चभाव्यम् । उतामृतत्वस्येशानोयदन्नेनातिरोहति ।। ॐ

एतावानस्य-महिमातोज्ज्यायाँश्चपूरुषः । पादोस्यव्विश्वाभूतानित्रिपादस्यामृतन्दिवि ।। ॐ त्रिपादू-
ध्र्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः।ततोव्विष्व्वङ्व्यक्क्रामत्साशनानशनेऽअभि।।ॐततोव्विरा
डजायतव्विराजोऽअधिपुरुषः । सजातोऽअत्यरिच्च्यतपश्चाद्भूमिमथोपुरः ।। ॐ
तस्माद्यज्ञात्सर्व्वहुतःसम्भृतम्पृषदाज्ज्यम् । पशूँस्ताँश्चाक्क्रेव्वायव्यानारण्याग्ग्राम्म्याश्चये ।। ॐ
तस्माद्यज्ञात्सर्व्वहुतऽऋचःसामानिजज्ञिरे । छन्दाꣳसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ।। ॐ
तस्मादश्वाऽअजायन्तयेकेचोभयादतः । गावोहजज्ञिरेतस्मात्स्माज्जाताऽअजावयः ।। ॐ
तंय्यज्ञम्बर्हिषिप्प्रौक्षन्पुरुषञ्जातमग्ग्रतः । तेनदेवाऽअयजन्तसाद्ध्याऽऋषयश्चये ।। ॐ
यत्पुरुषंव्यदधुः कतिधाव्यकल्प्पयन् । मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्च्येते ।। ॐ
ब्राह्मणोस्यमुखमासीद्बाहूराजन्न्यः कृत । ऊरूतदस्ययद्वैश्श्यःपद्भ्याꣳशूद्रोऽअजायत ।। ॐ
चन्द्रमामनसोजात श्चक्षोःसूर्य्योऽअजायत । श्रोत्राद्वायु श्चप्राणश्च मुखादग्निरजायत।। ॐ
नाब्भ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौःसमवर्त्तत पदद्भ्याम्भूमिर्द्दिशःश्रोत्रात्थालोकाँ २।ऽअकल्प्पयन्
।। ॐ यत्पुरुषेणहविषादेवायज्ञमतन्वत । ब्वसन्तोऽस्यासीदाज्ज्यङ्ग्रीष्मऽइध्मःशरद्धविः ।।

ॐसप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः । देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ।। ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्प्रथमान्यासन् । तेहनाकम्महिमानः सचन्तयत्रपूर्वेसाद्ध्यासन्तिदेवाः ।।

## ततो नाम पूजा (षोडशनामभिश्चन्द्रपूजां कुर्यात्)

**विधि निर्देष.**- निम्नलिखित नामहरू उच्चारण गर्दै सम्भव भए षोडशोपचारले पूजा गर्नू, नभए यथाशक्ति उपचारले रोहिणीसहित चन्द्रमाको पूजा गर्नू -

**प्रयोगः** -

ॐ हिमांशवे नमः चन्दनाक्षतपुष्पाणि समर्पयामि १, एवं चन्द्रमसे नमः २,ॐ सोमाय नमः ३, ॐ विधवे नमः ४, ॐ कुमुदबन्धवे नमः ५, ॐ सुधांशवे नमः ६, ॐ ओषधीशाय नमः ७, ॐ अब्जाय नमः ८,ॐ मृगाङ्काय नमः ९, ॐ कलानिधये नमः १०, ॐ नक्षत्रेशायः नमः ११, ॐ निशापतये नमः १२, ॐ जैवातृकाय नमः१३, ॐ द्विजराजाय नमः१४, ॐ शुभ्रांशवे नमः १५, ॐ क्षपाकराय नमः१६,

**विधि निर्देष.**-पूर्वादिक्रमले थालीका वरिपरि नवग्रहादिको र अठ्ठाईस नक्षत्रहरूको पूजा गर्नू ।

## अथावरणपूजा -



पूर्वादिक्रमेण नवग्रहपूजा - ॐ आदित्याय नमः, चन्दनाक्षतपुष्पाणि समर्पयामि ।।१।। एवं ॐ भौमाय नमः ।।२।। ॐ बुधाय नमः ।।३।। ॐ शनये नमः ।।४।। ॐ वृहस्पतये नमः ।।५।।ॐ राहवे नमः ।।६।। ॐ शुक्राय नमः ।।७।। ॐ केतुभ्योनमः।।८।। ततः षोडशपत्रेषु चन्द्रस्य षोडशकलाः पूर्वादिक्रमेण पूजयेत् -ॐ अमृतायै नमः ।।१।। ॐ मानदायै नमः ।।२।। ॐ पूषायै नमः ।।३।। ॐ तुष्ट्यै नमः ।।४।। ॐ पुष्ट्यै नमः ।।५।। ॐ रत्यै नमः ।।६।। ॐ धृत्यै नमः ।।७।। ॐ शशिन्यै नमः ।।८।। ॐ चन्द्रिकायै नमः ।।९।। ॐ क्रान्त्यै नमः ।।१०।। ॐ ज्योत्स्नायै नमः ।।११।। ॐ श्रियै नमः ।।१२।। ॐ प्रीत्यै नमः ।।१३।। ॐ अंगदायै नमः ।।१४।। ॐ पूर्णायै नमः ।।१५।। ॐ पूर्णामृतायै नमः ।।१६।।

ततोऽष्टाविंशति विन्दुषु पूर्वादिक्रमेण नक्षत्राणि पूजयेत् - ॐ रोहिण्यै नमः गन्धाक्षतपुष्पाणि समर्पयामि ।।१।।ॐ मृगशीर्षे नमः ।।२।। ॐ आर्द्रायै नमः ।।३।। ॐ पुनर्वसवे नमः ।।४।। ॐ तिष्याय नमः ।।५।। ॐ अश्लेषायै नमः ।।६।। ॐ मघायै नमः ।।७।। ॐ पूर्वाफाल्गुन्यै नमः ।।८।। ॐ उत्तराफल्गुन्यै नमः ।।९।। ॐ हस्ताय नमः ।।१०।। ॐ चित्राय नमः ।।११।। ॐ स्वात्यै ।।१२।। ॐ विशाखायै नमः ।।१३।। ॐ अनुराधायै नमः ।।१४।। ॐ ज्येष्ठायै नमः ।।१५।। ॐमूलाय नमः ।।१६।। ॐ पूर्वाषाढायै नमः ।।१७।।

ॐ उत्तराषाढायै नमः ।।१८।। ॐ अभिजिते नमः ।।१९।। ॐ श्रणाय नमः ।।२०।। ॐ धनिष्ठायै नमः ।।२१।। ॐ शतभिषजे नमः ।।२२।। ॐ पूर्वाभाद्रपदायै नमः ।।२३।। ॐ उत्तरभाद्रपदायै नमः ।।२४।। ॐ रेवत्यै नमः ।।२५।। ॐ अश्विन्यै नमः ।।२६।। ॐ भरण्यै नमः ।।२७।। ॐ कृत्तिकायै नमः ।।२८।। इति आवरणपूजां विधाय रोहिण्यै सिन्दूरादिसौभाग्यद्रव्याणि समर्पयेत् - **ॐ अभिष्टसिद्धिं मे देहि शरणागत वत्सल । भक्तया समर्पये तुभ्यं समस्ता वरणार्चनम् ।।** इति पुष्पाञ्जलिं दद्यात् ।

**धूपम्** - **वनस्पति रसोद्भूतो गन्धाढयः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।।**

**ॐ ब्राह्मणोऽस्य मुखमासीद्बाहूराजन्यः कृतः । ऊरूतदस्य यद्वैश्यः पद्भ्याᳪशूद्रोऽअजायत ।।**

दीपम्- सुप्रकाशो महान्दीपः सर्वतस्तिमिरापहः । सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् । ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत ।श्रोत्राद्वायुश्च प्राणश्चमुखादग्निरजायत ।।

नैवेद्यम्- सत्पात्रसिद्धसुहविर्विविधानेकभक्षणम् ।निवेदयामि देवेश सानुगाय गृहाण तत् ।।

ॐ नाभ्या आसीदन्तरिक्षᳪशीर्ष्णोद्यौः समवर्तत ।

पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोकाँ२ऽअकल्पयन् ।।

चौराशी०

आचमनीयम् - गङ्गा च यमुना चैव नर्मदा च सरस्वती । ताभ्यो जलं मयानीतं पुनराचमनीयकम् ।।

ॐ यत्पुरुषेण हविषा देवायज्ञमतन्वत । वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः ।।

ताम्बूलम् - पूगीफलं सताम्बूलं खदिरादिमनोहरम् । कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ।।

फलम् - इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ।।

सुगन्धद्रव्यम् - संसारार्णवमग्नञ्च पाहि मां रोहिणीपते । सुगन्धं च सुरश्रेष्ठ! गृहाण परमेश्वर! ।।

हिरण्यम् - हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।।

सहस्रसङ्ख्याकं तिलयवाक्षतादिकम् (गनौटा) -

इति वर्तिपुष्पतण्डुलतिलयवाक्षतादिसहस्रसङ्ख्याकं संकल्पपूर्वकं समर्पयेत् ।

सकर्पूरं नीराजनम्-

यज्ज्योतिः सर्वदेवानां तेजसां तेज उत्तमम् । आत्मज्योतिः परंधाम दीपोऽयं

प्रतिगृह्यताम् ।



दर्पणम् - दर्शनेन त्वमादर्श नूनं मङ्गलदायक । शौर्यसौभाग्यसत्कीर्तिनिर्मल ज्ञानदो भव ।।

चामरम् - शशाङ्ककरसङ्काशं हिमडिण्डिरपाण्डुरम् । प्रोत्सारयाशु दुरितं चामरामरवल्लभ ।।

प्रदक्षिणा - यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ।।

नमस्कारः - नमः शुभ्रांशवे तुभ्यं द्विजराजाय ते नमः। रोहिणीपतये तुभ्यं लक्ष्मीभ्रात्रे नमोऽस्तु ते।।

स्तुतिः - हिमांशवे नमस्तुभ्यं सोमचन्द्राय वै नमः । चन्द्राय विधवे नित्यं नमःकुमुदबन्धवे ।।१।।

सुधांशवे च सोमाय ओषधीशाय वै नमः । नमोऽब्जाय मृगाङ्काय कलानां निधये नमः।।२।।

नमो नक्षत्रनाथाय शर्वरीपतये नमः । जैवातृकाय सततं द्विजराजाय वै नमः ।।३।। इति ।

शङ्खाऽर्घ्य निवेदनम्-

नमस्ते मासमासान्ते जायमानः पुनः पुनः ।

गृहाणार्घ्यं शशाङ्क त्वं रोहिण्या सहितो मम ।। इति सपुष्पफलचनदनशङ्खतोयं चन्द्राय

समर्पयेत् । अर्घ दिएपछि सोमसूक्तले र पुराणका मन्त्रहरूले सोमको स्तुति गर्नू ।

## सोमसूक्तम्

आप्यायस्व मदिन्तम सोम विश्वेभिरꣳशुभिः ।।

भवा नः सप्रथस्तमः सखा वृधे ।।

सं ते पयाꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।

आप्यायमानो अमृताय सोम दिवी श्रवाꣳस्युत्तमानि धिष्व ।।

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।

गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यान् ।।

सोमो धेनुꣳ सोमो अर्वन्तमाशुꣳसोमो वीरं कर्मण्यं ददाति ।

सादन्यं विदथ्यꣳसभेयं पितृश्रवणं यो ददाशदस्मै ।।

अषाढं युत्सु पृतनासु पप्रिꣳस्वर्षामप्सां वृजनस्य गोपाम् ।

भरेषुजाꣳसुक्षितिꣳ सुश्रवसं जयन्तं त्वामनु मदेम सोम ।।

त्वमिमा औषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमा ततंथोर्वन्तरिक्षं त्वं ज्योति वितमो ववर्थ ।।
देवेन नो मनसा देव सोम रायो भागꣳसहसावन्नभि युध्य ।
मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा गविष्टौ ।। इति सोमसूक्तम् ।

**क्षमापनम् -**

न्यूनातिरिक्तकर्माणि मया यानि कृतानि च । क्षमस्व तानि सर्वाणि ताराधिप ! नमोऽस्तु ते ।।१।।
मन्त्रहीनं क्रियाहीनं विधिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ।।२।।

इति क्षमापयेत् ।

**अथलक्ष्मीनारायणपूजनम् -**

**विधि निर्देशः** - माझमा कलशमाथि तामाको थालीमा तीन पल परिमाणको सुनको प्रतिमा लक्ष्मीनारायणको न्यासपूर्वक पूजा गर्नू । न्यास गर्दा आफ्नो शरीमा चोर औंला र साहिंली औंलाले गर्नू । देवतामा फूल, कुश आदिले न्यास गर्नू ।

ततो मध्ये कलशपूजां विधाय तदुपरि ताम्रस्थाल्यां सुवर्णपलत्रयनिर्मित-लक्ष्मीनारायणप्रतिमाया अग्न्युत्तारणं कृत्वा तत्र निधाय ॐ **मनोजूतिरिति** प्राणप्रतिष्ठं विधाय न्यासं कुर्यात्- स्वदेहे **तर्जन्यनामिकाभ्यां देवतादेहे पुष्पादिना ॐ विष्णवे नमः, वामकरे, ॐ माधवाय नमः, दक्षकरे, ॐ गोविन्दा नमः, वामपादे, ॐ कृष्णाय नमः, दक्षपादे, ॐ केशवाय नमः, वामजानुनी, ॐ श्रीपतये नमः, दक्षजानुनी, ॐ पद्मनाभाय नमः, वामकट्याम्, ॐ हृषीकेशाय: नमः, दक्षिणकट्याम्, ॐ वासुदेवाय नमः, नाभौ ॐ जगत्पत्ये नमः, हृदये, ॐ वैकुण्ठाय नमः, वामकुक्षौ, पुण्डरीकाक्षाय नमः, दक्षिणकुक्षौ इति । ॐ मधुसूदनाय नमः, कण्ठे, ॐ गोपतये** नमः, वक्त्रे, ॐ दामोदराय नमः, नेत्रयोः, ॐ जगन्नाथाय नमः, शिरसि इति न्यासं विधाय ध्यानं कुर्यात् ।

ध्यानम् - **योगेश्वराय देवाय योगिनां पतये विभो । योगोद्भवाय नित्याय गोविन्दाय नमो नमः ।।**

आवाहनम् - पुरुषसूक्तेन ॐ सहस्रशीर्षेति०

आगच्छ भगवनदेव स्थाने चात्र स्थिरो भव । यावत्पूजां करिष्यामि तावत्वं सन्निधौ भव ।।

आसनम् - ॐ पुरुषएवेदꣳ सर्वं यद्भूतंयच्चभाव्यम् । उतामृतत्वस्येशानोयदन्नेनातिरोहति ।।

नानारत्नसमायुक्तं कार्तस्वरविभूषितम् । आसनं देववेश गृहाण पुरुषोत्तम ।।

आसनं समर्पयामि । **श्रीलक्ष्मीनारायणाय नमः ।**

चौराशी०

चौराशी०

पाद्यम् - गङ्गादिसर्वतीर्थेभ्यो मयानीतं सुशोभनम् । तोयमेतत्सुखस्पर्शं पाद्यं मे प्रतिगृह्यताम् ।।

अर्घ्यम् - गन्धपुष्पसमायुक्तौ नानासौगन्ध्यशीतलः । मया निवेदितो भक्त्या अर्घ्योऽयं प्रतिगृह्यताम् ।।

स्नानजलम् - गङ्गाजलं मयानीतं पवित्रं सुमनोहरम् । भक्त्यार्पितं सुरश्रेष्ठ गृहाण पुरुषोत्तम ।।

गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलम् ।। तव स्नानार्थमानीतं गृहाण परमेश्वर ।

पुनराचमनीयम् - उच्छिष्टोप्यशुचिर्वापि यस्य स्मरणमात्रतः । शुचिमाप्नोति तस्मै ते पुनराचमनीयकम् ।।

पञ्चामृतस्नानम् - तत्रादौ दुग्धस्नानम् - ॐ पयः पृथिव्याम्पयओषधिषुपयोदिव्यन्तरिपेक्षेपयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् ।

देवाद्यैर्वन्दिता धेनुः सर्वपापप्रणाशिनी । तत्क्षीरस्नापितो देव नित्यं च वरदो भव ।।

ततः शुद्धोदकेन

ॐआपोऽअस्मान्मातरः शुन्धयन्तु धृतेन नो घृतप्वःपुनन्तु । विश्वङहिरिप्रवहन्तिदेवीरुदिदाभ्यः शुचिरापूतऽएमि। दीक्षास्तपसोस्तनूरसि- तान्त्वा शिवाछंशग्मां परिदधे भद्रं वर्णम्पुष्यन् ।

दधिस्नानम् - ॐ दधिक्राब्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः । सुरभिनो

मुखाकरत्त्रणऽ आयूꣳषितारिषत् ।

कामतोऽकामतो वापि यन्मया पूर्वसञ्चितम् । तत्सर्वं विलयं यातु दधिस्नानेन केशव ।

पुनर्जलेन ।

घृतस्नानम्- ॐ घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम । ।

अनुस्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ।

रसानामुत्तममाज्यं देवानाञ्च सदा प्रियम् । तेन त्वं स्नापितो देव निधिकान्तिप्रदो भव ।

पुर्नजलेन ।

मधुस्नानम् - ॐ मधुव्वाता ऋतायतेमधुक्षरन्ति सिन्धवः माध्वीर्न्नः सन्त्वोषधीः । मधुक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधुद्यौरस्तुनः पिता।। मधुमान्नो वनस्पतिर्मधुमाँ२ऽअस्तुसूर्यः माध्वीर्गावोभवन्तुनः ।

यस्य स्मरणमात्रेण तृप्तिं यान्ति पितामहाः । मधुना स्नापितो देव नित्यं शोकहरो भव ।

पुर्नजलेन ।

शर्करास्नानम् - यमलोकभयात्रस्तः शरणं त्वां गतः प्रभो ।

खण्डस्नानेन देवेश मां कुरुष्व सुखान्वितम् ।। पुनः जलेन आपोऽअस्मान्निति ।

चौराशी०

वस्त्रयुगलम् - पीताम्बरयुगं देव सर्वकामार्थसिद्धये । मया निवेदितं भक्त्या गृहाण सुरसत्तम ।।

यज्ञोपवीतम् - दामोदर !नमस्तेऽस्तु त्राहि मां भवसागरात् । ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम ।।

गन्धम् - श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् ।।

तिलयवाक्षताः - धान्यराजाः स्वमाङ्गल्या विष्णुप्रीतिकरा यवाः ।

तस्मादेषां प्रदानेन ममास्त्वविकलं फलम् ।

पुष्पम्, माल्यम् - श्रीश्चते०

नानाविधानि पुष्पाणि नानाक्षेत्रोद्भवानि च । तुलसीदलमिश्राणि अर्पितानि रमापते ।

अङ्गपूजाः - ॐ कृष्णाय नमः पादौ पूजयामि, ॐ केशवाय नमः, गुल्फौ पूजयामि, कंसारये नमः, जानुनी पू., वामनाय नमः, कटिं पू.,अच्युताय,नमः-हृदयं पू०:, माधवाय नमः, कण्ठं पू. ॐ रामाय नमः, बाहू पू. ॐ नृसिंहाय नमः, मुखं पू., ॐ वाराहाय नमः, नासिके पू., ॐ विष्णवे नमः नेत्रे पू. ॐ शार्ङ्गिणे नमः, ललाटं पू., ॐ मुरारये नमः शिरः पू., ॐ लक्ष्मीनारायणाय नमः सर्वाङ्गं पूजयामि । ततो लक्ष्मीप्रीतये सिन्दूरादिसौभाग्यभूषणानि वस्त्रं च

निवेदयेत् । धूपं, दीपं, अपूपादि नैवेद्यं दत्वा ।

चौराशी०

**कर्पूरजलम्** - यत्पुरुषेणेति ०

**कर्पूरवासितं तोयं गङ्गायास्तु समाहृतम् । आचम्यतां मया दत्तं लक्ष्मीनारायणप्रभो ।**

**ताम्बुलनारिकेलपूगीफललवङ्गादीनि च समर्पयेत् ।**

**दक्षिणाद्रव्यम् - हिरण्यगर्भ** इति । चामरम, आदर्शनम् समर्प्य **यथाशक्ति जपं** कृत्वा **नीराजनं** कुर्यात् ।

**सङ्ख्याकृत (गनौटा) वस्तुवर्तिपुष्पादिकमं सङ्कल्प्य निवेदयेत् ।**

**कर्पूरारार्तिकम् - ॐ आरात्रिपार्थिव० इति ।**

सूर्येन्दुतारकावह्नितेज : पुंज विराजितम् कर्पूरदीपं देवेश प्रतिगृह्ण सुरेश्वर ।।

मन्त्रपुष्पाञ्जलि : - ॐ यज्ञेन यज्ञमयजन्त इत्यादि............ पुष्पाञ्जलिं समर्पयामि **लक्ष्मीनारायणाय नमः**, ॐ तनूपा अग्ने इति, आरार्तिकं तापयेत् । **प्रदक्षिणा यानि कानि०** इति ।

विशेषार्घ्यम् - फलान्नं चैव शुभ्रं च भक्तियुक्तेन चेतसा । गृहाणार्घ्यं मयादत्तं लक्ष्म्यासह जगद्गुरो ।।

क्षमापनम् - अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् । विपरीतन्तु तत्सर्वं क्षमस्व परमेश्वर ।।

मन्त्रहीनं क्रियाहीनं विधीहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णन्तदस्तु मे ।। इति।

चौराशी०

**सूचना -** यसपछि **कथाश्रवण** गर्नुपर्छ।

**विधि निर्देष.** - त्यसपछि अग्निस्थापना विधिले होम समाप्त गरेपछि **इमन्देवा०** मन्त्रले सम्भव भए एक हजार आठ (१००८), नभए १०८, त्यो पनि नभए २८ संख्या पायस (खीर) को हवन गर्नू।

**आचार्यलाई** - २५६ मुठीको पूर्णपात्र र शय्यादान गरी **यज्ञान्तगोदान, भूयसीदक्षिणा** गर्नू। माझका दुई कलश आचार्यलाई दिनू। त्यसपछि **गच्छ गच्छ०** पढेर अक्षता छर्की आवाहित देवताहरूको विसर्जन गर्नू।

**प्रयोग : -** अथ अग्निस्थापनविधिना होमं समाप्य पायसं **इमन्देवा** इति मन्त्रेण चन्द्रस्य सति सम्भवे अष्टोत्तरसहस्रसंख्या अशक्तौ, अष्टोत्तरशतसंख्या वा अष्टाविंशति संख्या जुहुयात् । षट्पञ्चाशदधिकद्विशतमुष्टि परिमितं पूर्णपात्रं कृत्वा **द्विजदम्पति संपूज्य शय्यादानं कृत्वा,** आचार्याय दद्यात् । यावद्वर्षमहर्ब्राह्मणभोजनं कारयेत् । अथवा एकस्य जनस्य वर्षावधिभोजनाय पर्याप्तमन्नं तदहरेव ब्राह्मणाय दद्यात् ।

**यज्ञान्तगोदानम् -**

**नमो गोभ्य** इत्यादिना सालङ्कारां गां अथवा गोनिष्क्रयभूतदेयद्रव्यं वा संपूज्य **आकृष्णेनेति** देयब्राह्मणञ्च पूजयित्वा गोपूजनेन कर्मपात्रोदकेन **मनोमे तर्पयत** इत्यादिना स्वशिरस्यभिषिञ्च्य पितृदेवताः सन्तर्प्य सकुशोदकं गोपुच्छमादाय हरिः ॐ तत्सत् ३ विष्णुः ३ इत्यादि देशकालादीन्सङ्कीर्त्यंअद्यामुक गोत्रस्यामुकप्रवरस्य शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनीयशाखाध्यायिनोऽमुकशर्मणो मम सपरिवारस्य सकुटुम्बस्यात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थमेतज्जन्मपूर्वजन्मकृतनानाविधपापशान्त्यर्थं कृतस्य, आदौ दीपकलशगणेशादिपूजनपूर्वकपाठादिपूर्वाङ्गत्वादिप्रधानत्वेन सहस्त्रचन्द्रपूजनकर्मणि तथा चतुरशीतिसिद्धादीनां पूजनकर्मणि यथालब्धोपचारैर्यथाबुद्धिकृतपूजनहवनकर्मणो न्यूनातिरिक्तपतिपूर्णार्थं कृताकृतच्युताच्युतपूर्णापूर्णफलप्राप्तिद्वारा श्रीलक्ष्मीनारायणप्रीतये इमां गां सालङ्कारा रुद्रदैवत्याम, अमुकगोत्रायामुकशर्मणे सुपूजितायाचार्याय दातुमहमुत्सृजे तत्सत्र मम । **कपिले सर्वदेवानामिति** गोप्रार्थनां कृत्वा **दानप्रतिष्ठाद्रव्यं** सङ्कल्प्य दद्यात् । प्रतिग्रहिता **स्वस्तीति** गोदानं स्वीकृत्य **कोदात्** इत्यादि कामस्तुतिं पठेत् । ततो **भूयसीदक्षिणासङ्कल्पं** कुर्यात् । स्थापितपूजितकलशानपि सङ्कल्प्य ब्राह्मणेभ्यो दद्यात् । मध्यस्थकलशौ आचार्याय दद्यात् । ततः **यस्य स्मृत्या, कायेनवाचा०** इति पठेत् । **ततोऽक्षतान्विकिरन् गच्छ गच्छ,** इत्यादि पठेत्

**यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् । इष्टकामस्यसिद्ध्यर्थं पुनरागमनाय च ।।**

चौराशी०

इति पठित्वा आवाहितदेवान्विसर्जयेत् । **ॐ अच्युताय नमः ३** इति पठेत् । ब्राह्मणाश्च यजमानस्याभिषेकं वैदिकमन्त्रै **रक्षाबन्धनं** च कुर्युः । इति शुभम् ।

**पुनश्च - अवभृथस्नानं** कृत्वा स्नानवस्त्रादीन् दीनानाथेभ्यो दद्यात् लौकिकव्यवहारञ्च परित्यजेत् ।

**सहस्रचन्द्रपूजनफलम् (कथा)**

**नमस्कृत्य महादेवं लोकानां हितकाम्यया । सहस्रकृत्वः पूर्णेन्दु दर्शने विधिरुच्यते ।।१।।**

**सहस्रकृत्वः पूर्णस्य चन्द्रस्य दर्शनं भवेत् । यस्मिन्नब्दे दिने मासि जनानां देवरूपिणाम् ।।२।।**

**शुचौ देशे शोधयित्वा भूमिं प्रास्य कुशोदकैः । मण्डपं रचयेत्तत्र षोडशस्तम्भमण्डितम् ।।३।।**

**सहस्रपूर्णसङ्ख्येन ताम्रेण कलशानपि । कारयेत्पञ्च तत्रैव स्थापयेत् पञ्चपल्लवम् ।।४।।**

**मध्ये सुवर्णप्रतिमां लक्ष्मीनारायणस्य च । स्थापयित्वा वाहयित्वा पूजयेत्सुसमाहितः ।।५।।**

**भगवन् भूतभव्येश लक्ष्मीनारायण प्रभो । पूजितोऽसि महादेव क्षमस्व परमेश्वरः ।।६।।**

**इति पूजां समाप्याथ ब्राह्मणान्भोजयेत्सुधीः । सहस्रशः शतशोऽथ वित्तशाठ्यं विवर्जयेत् ।।७।।**

**एवं विधि समायुक्तो नरो भवति देवता । न तस्य पुनरावृत्तिर्विष्णुलोके महीयते ।।८।।**

स्वेच्छया तन्मतो राजा चक्रवर्ती भवेन्नरः । धार्मिको ज्ञानवान् दीर्घजीवी शत्रुविवर्जितः ।।९।।

सहस्त्रपूर्णचन्द्रस्य पूजनन्तु समाचरेत् । मोहालस्यप्रमादेन यदि पूजां न कारयेत् ।।१०।।

वृथा जन्म भवेत्तस्य मालतीव वनान्तरे ।।११।।

विवादे परिवादे वा लोभे मत्सर एव वा । एतत्पूजां समाकृत्य व्यवहारे पतेद्यदि ।।१३।।

शुनो जन्म शतं प्राप्य शूकरत्वं प्रपद्यते । याजकोऽपि भवेन्मूर्खो लुब्धको ह्यविवेकतः ।।१४।।

य एतत् प्रातरुत्थाय समाहितमनाः सुधीः। पठेद्वा शृणुयात्पुण्यं कोटियज्ञफलं लभेत् ।।१५।।

-इति चतुरशीतिसिद्धसहस्त्रचन्द्रपूजनफलम् -

सूत उवाच -

एकदा चन्द्रमा स्वर्गे पितरं समपृच्छत । सर्वेलोकोः शोकरोगदोषग्रस्ता विचेतसः ।।१।।

जायन्ते च विपद्यन्ते तेषामुद्धरणं कथम् । प्रायश्चित्तं कथं तेषां परलोकोपकारकम् ।।२।।

कृतेन येन निरयान्न गच्छेरन्वदाधुना ।

अत्रिरुवाच-

शृणु पुत्र प्रवक्ष्यामि नृणामत्युपकारम् । कृतेन येन पापात्मा न गच्छेद्यमयातनाम् ।।३।।

एतदेव पुरास्कन्दो देवदारुवनान्तरे । कैलासे मलयावासे शङ्करं लोकशङ्करम् ।।४।।

पप्रच्छ विनयाक्रान्तं पितरं योगसागरम् । भगवन् मे कुरु दयां यदि दीनदयालुता ।।५।।

तदुपायं कथय मे लोकदुःखाकुलोऽस्म्यहम् । ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।।६।।

वर्णाश्रमाचारहीना गच्छन्ति यमयातनाम् । तेषां पापार्दितानान्तु इहैव निष्कृतिर्यथा ।।७।।

शङ्कर उवाच -

भवेन्न यान्ति निरयान्कृत्वापि पातकं महत् । क्रौञ्चारे शृणुचात्यन्तं परं गोप्यं न कस्यचित् ।।८।।

मयाख्यातं परं स्कन्द त्वत्प्रेमवशतोऽधुना । वक्ष्ये मनुष्यैर्वेददाशीवर्षेऽतीते व्रतं चरेत् ।।९।।

महाव्रतमिति ख्यातं सिद्धव्रतमितीर्यते । चुतरशीतिसिद्धानां पूजनं क्रमतो भवेत् ।।१०।।

मध्यवेद्यां सिद्धपीठस्थापनं पूजनं क्रमात् । अनन्तकूर्मपीठाधो धर्मज्ञानादिकन्तथा ।।११।।

वैराग्यैश्वर्यकं पूज्यं पीठकोणान्तरं वहिः । मध्ये तत्र संविन्नाले महिद्यौर्भूमिशोधनम् ।।१२।।

पृष्ट्वा भूमिं भूरसीति धान्येति धान्यस्थापनम् । आजिघ्रेति हि मन्त्रेण कलशं स्थापयेत्पुनः ।।१३।।

तस्योपरि ताम्रपात्रं स्वर्णसिंहासनान्वितम् । चतुरशीतिसिद्धानां सुवर्णप्रतिमान्विताम् ।।१४।।
मनोजूतिरिति मन्त्रेण प्रतिष्ठाप्य यथाविधि । सिद्धपीठकोष्ठ बाह्ये ईशानक्रमतो न्यसेत् ।।१५।।
चत्वारश्चैव संपूज्याः शेषा मध्ये तु विन्यसेत् । मध्यकोष्ठं तु हर्यर्थ सर्वतोभद्रमण्डलम् ।।१६।।
तत्रैव निद्राकलशं पूर्वोक्तविधिना न्यसेत् । नारायणस्य प्रतिमां सलक्ष्मीकां तथात्मनः ।।१७।।
प्राणप्रतिष्ठाविधिना पाद्यार्घ्यावाहनादिभिः । सिद्धतोभद्रमालिख्य प्रागुत्तरक्रमेण हि ।।१८।।
कुर्याद्रेखा दश दश पूजयेन्नामतः क्रमात् । ऋद्धिर्वृद्धिस्तुष्टिः कान्तिर्दया पुष्टिः क्रियोन्नतिः ।।१९।।
क्षान्तिः शान्तिः क्षमा योगा शुभ्रा विद्युत्प्रभावती ।
सौरी चान्द्री कला मोघा सिद्धेती क्रमतः स्मृताः ।।२०।।
अशीतिकोष्ठे सिद्धान्दीन्पूर्वोक्तविधिना यजेत् । प्रणवादिचतुर्थ्यन्तैर्नमोन्तैर्मनुना युताम् ।।२१।।
सिद्धः सिद्धेश्वरः सिद्धसुखसिद्धश्च दर्शनः । महासिद्धः सिद्धदेवः सिद्धशास्त्रप्रवर्तकः ।।२२।।
सिद्धाचार्यो ज्ञानसिद्धः सिद्धभुक् सिद्धदक्षिणः । तीर्थसिद्धो योगसिद्धो भोगसिद्धश्चतुर्दश ।।२३।।
गुणसिद्धश्चन्द्रसिद्धो गणसिद्धश्च सिद्धकः । सिद्धसेनः सिद्धघटः सिद्धसूर्योऽनुसिद्धकः ।।२४।।

सिद्धकाल: सिद्धकाम: सिद्धब्रह्मस्वरूपक: । सिद्धकर्ता सिद्धभर्ता सिद्धिद: सिद्धसाधक: ।।२५।।

सिद्धातिग:कलासिद्ध: सर्वसिद्ध: प्रसिद्धक:।सिद्धमान:सिद्धकल्प: सिद्धामृत: कलातिग: ।।२६।।

षट्त्रिंशत्सिद्धसिद्धपारश्च सिद्धनायक: ।सिद्धवल: स्वत: सिद्धोभयसिद्धैकसाधन : ।।२७।।

लोकोसिद्धो यज्ञसिद्ध: शुद्धसिद्धोऽवसिद्धक:।

वषट्सिद्ध: स्वस्तिसिद्धो भूतिसिद्धोऽधिसिद्धक: ।।२८।।

भव्यसिद्ध: पूतसिद्ध: शम्भूसिद्ध: सुसिद्धक: । दक्षसिद्धो रूपसिद्धो हंससिद्धो: प्रसिद्धक: ।।२९।।

विष्णुसिद्धो मुक्तसिद्ध: सिद्धक: सिद्धवाक तथा । सिद्धधामा: सिद्धतनु: सिद्धानन्द स्वरूपिणे ।।३०।।

पुण्यसिद्धो भुव: सिद्ध: स्वर्गसिद्ध: प्रदायक:।सिद्धमन्त्र:शान्तिसिद्ध: पुरूसिद्धो नियामक: ।।३१।।

हिरण्यसिद्धो वाकसिद्धस्तत्वसिद्धोऽतिसिद्धक:। सिद्धरत्न: सिद्धमाली सिद्धो वैकुण्ठरुपधृक ।।३२।।

सिद्धसेन: सिद्धसारो रुद्रसिद्धस्तथैव च । महामहामहासिद्धश्चतुरशीति संज्ञक : ।।३३।।

संपूज्य: प्रतिकोष्ठेषु सप्तावृत्या रविं न्यसेत् । अर्यमा मित्रावरुण इन्द्रश्चैव चतुर्थकम् ।।३४।।

विवस्ववांश्च तथा त्वष्टा विष्णुरंशुर्भगस्तथा।पूषा पर्जयन्तो धाता च माधव: क्रमतो यजेत् ।।३५।।

प्रतिकोष्ठं पूजयित्वा पूजां चन्द्रस्य तत्क्रमात् । अष्टविंशतिनक्षत्रैः प्रतिकोष्ठं त्रिवारकम् ।।३६।।
कृत्वा मध्यमकोष्ठेषु सर्वतोभद्रमण्डलम् । षट्पञ्चाशत्तत्रदेवानावाह्य क्रमशो यजेत् ।।३७।।
कर्णिकायां च कलशं निद्रासंज्ञं न्यसेत्पुनः । आजिघ्रकलशेत्युक्त्वा वरुणेति पठेदनु ।।३८।।
मध्ये नारायणः पूज्यः सश्रीको निजसूक्ततः । पूर्णादर्वीति मन्त्रेण तन्मुखे पूर्णपात्रकम् ।।३९।।
ताम्रस्थालीं साष्टदलां कृत्वा दिक्पालपूजनम् । ग्रहपूजां ततः कृत्वा साधिप्रत्यधिदैवतम् ।।४०।।
तद्विष्णोरिति मन्त्रेण तस्याग्रे स्वात्मबिम्बकम् ।पलत्रयमितं स्थाप्यं न्यासं कुर्यात् प्रयत्नत।।४१।।
वामे करे दक्षिणे च वामदक्षिणपादयोः । वामजानौ दक्षिणे च कट्योश्च दक्षवामयोः ।।४२।।
नाभौ तथैव हृदये कुक्षौ वामे च दक्षिणे । कण्ठे वक्त्रे नेत्रमूर्ध्नि षोडशाङ्गेषु नामभिः ।।४३।।
विष्णुर्माधवो गोविन्द कृष्णः केशवः श्रीपति : । पद्मनाभो हृषीकेशो वासुदेवो जगत्पति : ।।४४।।
वैकुण्ठः पुण्डरीकाक्षो मधुसूदनगोपती । दामोदरो जगन्नाथः क्रमादङ्गानि संस्पृशेत् ।।४५।।
अनुलोमविलोमेन ह्यङ्गपूजां पुनश्चरेत्। पादौ गुल्फौ जानुकटीहृत्कण्ठोदोर्मुखेषु च ।।४६।।
नासिकानेत्रभालेषु शिरसि विष्णुनामतः । कृष्ण केशव कंसारि वामनाच्युत माधवाः ।।४७।।

रामनृसिंहवाराहास्तत्तत्स्थानेषु स्पृशेत्तथा । विष्णु शार्ङ्गी मुरारिश्च क्रमादेषोविधिः स्मृत : ।।४८।।

चौराशी०

चतुरशीतिविप्राणां पूजनं कारयेत् पुनः । वस्त्रालङ्कारगन्धाद्यै रौप्यं गोदानकं चरेत् ।।४९।।

जन्मान्तरीयपापस्य तथैव चैहिकस्य च । प्रायश्चित्तमिदं प्रोक्तं तथैवागन्तुकस्य च ।।५०।।

कृत्वा व्रतमिदं जीवः कृतकृत्यो भवेद्भुवि । षाण्मातुर श्रुणु पुनः पापेषु नरमेत् क्वचित् ।।५१।।

असत्यं न वदेत्किचिन्नाधर्मं चिन्तयेज्जनः । यद्यधर्मं प्रकुरुते सर्वं कुञ्जरशौचवत् ।।५२।।

## सूत उवाच -

श्रुत्वा शङ्करवाक्यन्तद्गुह्यं प्रपच्छ सादरम् ।शृणु शौनक वक्ष्यामि सेतिहासं कथानकम् ।।५३।।

## स्कन्द उवाच -

श्रुणु स्कन्द प्रवक्ष्यामि गोप्याद्गोप्यतरं परम् । यस्य श्रवणमात्रेण प्रायश्चित्तं प्रजायते ।।५४।।

नर्मदातीरनगरे माहिष्मत्यां पुरा किल । ब्राह्मणो ब्रह्मवर्चस्वी ज्ञानवान् धार्मिकः कृति ।।५५।।

कदाचित्संगदोषेण रागान्धो धर्मवर्जितः । अकृत्याचरणे शक्तो मांसभुक्, मद्यप :सदा।।५६।।

सर्वगामी सर्वभक्षी कौलधर्मपरायणः । एवं तस्य गताहानि चतुरशीतिवत्सरम् ।।५७।।
एकदा नर्मदातीरे ब्राह्मणा वेदपारगाः । सिद्धव्रतं मुदा चक्रुः शिवशर्मा समागतः ।।५८।।
तस्य प्राचीनमित्रं च श्रीशर्माणं द्विजोत्तमम् । दृष्वा मित्रं प्रत्युवाच कस्मादागतवान् भवान् ।।५९।।
वाक्यं श्रीशर्मणः श्रुत्वा भूत्वा किञ्चिदवाङ्मुख । पुण्यात्मनो दर्शनाद्वै स्पर्शनान्मननादपि ।।६०।।
शुद्धान्त;करणो जातो रुरोद मित्रसन्निधौ । उवाच किमु वक्तव्यं ह्यकर्तव्यं मया कृतम् ।।६१।।
कथं मे निष्कृतिर्भूयान्मज्जेऽहं नरकेऽशुभे । उद्धारं कुरु मे वन्धो प्राश्चित्तं कथं भवेत् ।।६२।।
उवाच वद मे दीने दयाऽस्ति त्वं कृपां कुरु । वचनं शिवदत्तस्य श्रुत्वा खेदसमन्वितः ।।६३।।
श्रीशर्मा समुवाचाथ निर्हेतुकृपयान्वितः । संवत्सरं कति जातं ब्रह्मन् वद तवाधुना ।।६४।।
चतुरशीतिवर्षेऽहमब्रवीत्तं मुदा तदा । श्रीशर्मा प्रत्युवाचेदं कुरु सिद्धव्रतं भवान् ।।६५।।
इत्युक्ते वरयित्वा तं चकार व्रतमुत्तमम् । तद्व्रतस्य प्रभावेण मुक्तोऽभूत्स च पातकात् ।।६६।।
दिव्यवर्ष तपस्तप्त्वा परमां गतिमाययौ । यः श्रृणोति परं भक्त्या पठेद्वा सुसमाहित : ।।६७।।
स्वर्गमोक्षप्रदं धन्यं स गच्छेद् परमं पदम् ।।

इति श्रीरुद्रयामले सिद्धभागे व्रतखण्डे सिद्धव्रतं नाम पञ्चाशीतितमोऽध्यायः ।



**गते वर्षद्वये सार्धे पञ्चपक्षे दिनद्वये । दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः ।।५६।।**

**त्र्यधिके वा अशीत्यब्दे चतुर्मासयुते ततः । भवेच्चन्द्रसहस्रन्तु तावज्जीवति यो नरः ।**

**उद्यापनं प्रकर्तव्यं तेन चात्र प्रयत्नतः ।।५७।।**

**यत्पुण्यं परमं प्रोक्तं ततं यत्र याजिनाम् । सत्यवादिषु यत्पुण्यं यत्पुण्यं हेमदायिनि ।।**

**तत्पुण्यं लभ्यते विप्र सहस्राब्दस्य जीविभि ।।५८।।**

**चतुर्दश्यां शुचिस्नात्वा दन्तधावनपूर्वकम् । पौर्णमास्यां तथा कृत्वा चन्द्रपूजां च कारयेत् ।।६०।।**

**प्रयतैः प्रतिमाः कार्याश्चन्द्रमण्डलसन्निभाः । सहस्रसङ्ख्या ह्यथवा तदर्धं वा तदर्धकम् ।**

**निजवित्तानुसारेण तदर्धेन तदर्धकम् ।।६२।।**

**अथवा षोडश शुभा विधातव्याः प्रयत्नतः । चन्द्रपूजां ततः कुर्यादागमोक्तविधानतः ।।६३।।**

**सोममन्त्रेण होमस्तु कार्यो वित्तानुसारत् । प्रतिमास्थापनं कुर्यात् सोममन्त्रमुदीरयेत् ।।६४।।**

**सोमोत्पत्तिं सोमसूक्तं पाठयेच्च प्रयत्नतः । पूजनीयौ प्रयत्नेन वस्त्रैश्च द्विजदम्पती ।।६५।।**

कर्तव्यं च ततो भूरिदक्षिणादानमुत्तमम् ।



इति श्रीस्कन्दपुराणान्तर्गत वैष्णवखण्डस्य, अयोध्यामाहात्म्ये चन्द्रसहस्र-पूजन-व्रतोद्यापनविधिवर्णनम् ।

**सोमोत्पत्तिकथा (अत्रिनयनाभ्यां सोमः समुत्पन्नः) -**

पिता सोमस्य वै राजन् जज्ञेऽत्रिर्भगवानृषिः । ब्रह्मणो मानसात् पूर्वं प्रजासर्गं विधित्सतः ।।१।।

तत्रात्रिः सर्वभूतानां तस्थौ स्वतनयैर्युतः । कर्मणा मनसा वाचा शुभान्येव चचार सः ।।२।।

अहिंस्रः सर्वभूतेषु धर्मात्मा संशितव्रतः । काष्ठकुड्यशिलाभूत ऊर्ध्वबाहुर्महाद्युतिः ।।३।।

अनुत्तरं नाम तपो येन तप्तं महत् पुरा । त्रीणि वर्षसहस्राणि दिव्यानीति हि नः श्रुतम् ।।४।।

तत्रोर्ध्वरेतसस्तस्य स्थितस्यानिमिषस्य ह । सोमत्वं तनुरापेदे महासत्त्वस्य भारत ।।५।।

ऊर्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः । नेत्राभ्यां वारि सुस्राव दशधा द्योतयद् दिशः ।।६।।

तं गर्भं विधिना हृष्टा दशदेव्यो दशुस्तदा । समेत्य धारयामासुर्न च ताः समशक्नुवन् ।।७।।

स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः । पपात भासयँल्लोकाञ्छीतांशुः सर्वभावनः ।।८।।

यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः । ततस्ताभिः सहैवाशु निपपात वसुन्धराम् ।।९।।

पतितं सोममालोक्य ब्रह्मा लोकपितामहः । रथमारोपयामास लोकानां हितकाम्यया ।।१०।।

स हि वेदमयस्तात धर्मात्मा सत्यसंग्रहः । युक्तो वाजिसहस्रेण सितेनेति हि नः श्रुतम् ।।११।।

तस्मिन् निपतिते देवाः पुत्रेऽत्रेः परमात्मनि । तुष्टवुर्ब्रह्मणः पुत्रा मानसाः सप्त ये श्रुताः ।।१२।।

तथैवाङ्गिरसस्तत्र भृगुरेवात्मजैः सह । ऋग्भिर्यजुर्भिर्बहुलैरथर्वाङ्गिरसैरपि ।।१३।।

तस्य संस्तूयमानस्य तेजः सोमस्य भास्वतः । आप्यायमानं लोकांस्त्रीन् भासयामास सर्वशः ।।१४।।

स तेन रथमुख्येन सागरान्तां वसुन्धराम् । त्रिःसप्तकृत्वोऽतियशाश्चकाराभिप्रदक्षिणम् ।।१५।।

तस्य यच्च्यावितं तेजः पृथिवीमन्वपद्यत । ओषध्यस्ताः समुद्भूतास्तेजसा प्रज्वलन्त्युत ।।१६।।

ताभिर्धार्यास्त्रयो लोकाः प्रजाश्चैव चतुर्विधाः । पोष्टा हि भगवान् सोमो जगतो जगतीपते ।।१७।।

स लब्धतेजा भगवान् संस्तवैस्तैश्च कर्मभिः । तपस्तेपे महाभाग पद्मानां दशतीर्दश ।।१८।।

हिरण्यवर्णा या देव्यो धारयन्त्यात्मना जगत् । निधिस्तासामभूद्देवः प्रख्यातः स्वेन कर्मणा ।।१९।।

ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः । बीजौषधीनां विप्राणामपां च जनमेजय ।।२०।।

**सोऽभिषिक्तो महाराज राजराज्येन राजराट् । लोकांस्त्रीन् भासयामास स्वभासा भास्वतां वरः ।।२१।।**

**सप्तविंशतिमिन्दोस्तु दाक्षायणीर्महाव्रताः । ददौ प्राचेतसो दक्षो नक्षत्राणीति या विदुः ।।२२।।**

(श्रीहरिवंशपुराणस्य हरिवंशपर्वणि, पञ्चविंशेऽध्याये इयं कथा वर्तते)

**सूचना -** अरू कथाहरूमा भागवत ४ स्कन्ध अ. १ सोमोत्पत्ति (अत्रेः पत्न्याः अनसूयायाः गर्भात् सोमः उत्पन्नः) । (क) पद्मपुराण सृष्टिखण्ड अ. ४ मा 'क्षीरसागरात् सोमोत्पत्तिः' कथा छ । (ख) विष्णुपुराण अंश ४ को अ. ६ श्लो. ५,६,७ । (ग) हरिवंशपर्व अ. २५ । यसैगरी बाराहपुराण, मत्स्यपुराण आदिमा सोमोत्पत्ति कथा पाइन्छ ।

**हरि ॐ तत्सत्**

**श्रीकृष्णार्पणमस्तु**

